मित्र हि तन्मुहिषीरूपमिव भूत्वातिष्ठद्, देवेभ्यः शुन्धस्व, देवेभ्यः शुम्भस्वेति, देवेभ्य एवैनाꣳ शुन्धन्ति, देवेभ्यः शुम्भन्ति, निःसारयति, यद्देवास्या उद्धन्तः क्रूरमक्रꣳस्तद्-क्रूरमक,—स्तन्निःसारयती,—न्द्रघोषास्त्वा पुरस्ताद्वसुभिः पान्त्वित्ये,—तद्वा इत्या वा इमा दिशो, यथादेवतमेवैनां प्रोक्षी,—दतो वै देवा असुरान्मनसा विनुद्य स्वर्गं लोकमायꣳ,—स्त एता देवता अन्ततोऽदधतासुराणामनन्ववभावाया,—ऽतो वा एतद्यजमानो भ्रातृव्यं मनसा विनुद्य स्वर्गं लोक-मेति, स एता देवता अन्ततो धत्ते भ्रातृव्यस्यानन्ववभावाय, तेऽकामयन्त, सपत्नं भ्रातृव्यꣳ सहेमहीति, सिꣳहीरसि सपत्नसाही स्वाहेति, तमेव तेन काममाश्नुवत, सपत्नं भ्रातृव्यꣳ साद्वा तेऽकामयन्त, पशवो नः स्युरिति, सिꣳहीरसि रायस्पोषवनिः स्वाहेति, तमेव तेन काममाश्नुवत, सपत्नं भ्रातृव्यꣳ साद्वा पशून् विन्त्वा तेऽकामयन्त, प्रजा नः स्यादिति, सिꣳहीरसि सुप्रजावनिः स्वाहेति, तमेव तेन काममाश्नुवत, सिꣳहीरस्यादित्यवनिः सजातवनिः स्वाहेत्या,—दित्याभिर्हि सा प्रजाभिः सह, तेऽकामयन्त, देवा नो यज्ञꣳ विद्युरिति, सिꣳहीरस्या,—वह देवान् देवायते यजमानाय स्वाहेति, तमेव तेन काममाश्नुवत, भूतेभ्य-स्त्वे,—त्युद्दिशति, देवा इह्ये भूता, यत्र वा अदोऽग्निर्होत्रादपापाक्रामत्स सर्वेषु भूतेष्ववसद्, या पशुष्ववसत्तामनाच्छिन्नस्तुकस्यान्तराशृङ्गमवसद्, याꣳ वनस्पतिषु तां पूतुद्रौ, यामोषधीषु ताꣳ सुगन्धितेजने, यत्संभारान्त्संभरति यद्देवात्राग्नेर्न्यक्तं तत्संभरति, यानि वा अदोऽग्नेर-स्थान्यधूनुत स पूतुद्रुरभवद्, यन्माꣳसं तद्गुग्गुलु, यत् पूयितमुपश्लिष्टꣳ स सुगन्धितेजनो, यद्देते संभारा भवन्ति यद्देवात्राग्नेर्न्यक्तं तस्यावरुद्ध्यै, विश्वायुरसि, पृथिवीं दृꣳहेत्ये,—षाꣳ इह्येतें लोकानाꣳ विधृत्यै परिधीयन्ते, ध्रुवक्षितिरस्य,—न्तरिक्षं दृꣳहेत्य,—न्तरिक्षꣳ हि यज्ञो, ऽच्युतक्षिदसि, दिवं दृꣳहेति, दिवमेवैनमजीगम,—दग्नेर्भस्मास्य,—ग्नेः पुरीषमसीत्य,—ग्नेर्ह्येतद्भस्मा,—ऽग्नेः पुरीषं, देवपात्रꣳ वा उत्तरवेदिं, देवेभ्यो देवपात्रं प्रोच्यꣳ, वैभ्राजा देवा, यदाह, विभ्राड् बृहत्पिबतु सोम्यं मध्विति, देवेभ्यो वा एतद्देवपात्रं प्राह, प्र वसीयसः पात्रमाप्नोति, ब्राह्मणं तु पात्रे न मीमाꣳसेत यः पात्रिय इव स्याद् ॥ ५ ॥ १५

एतावती वा इयं पृथिवी यावती वेदि,—र्परिमिताद्वा एतद्भ्रातृव्यं निर्भज्य यजमानाय परि-गृह्णात्य,—क्षꣳ वा अमेध्यं,—मापो हवि,—र्यत्प्रोक्षति मेध्यमेवैनत्करोत्य,—क्षꣳ वा अमेध्यꣳ,

---

[ विभ्राड् बृहत्पिबतु० । ऋ १०,१७०,१; सा ६२८,१४५२ ]

[ ६ ] काठ २५,७ । कपि ३९,२,५ । वा ०,०,९,२०,१८,२८,२०,३० । काण्व ०,३,१०,२७,१९,४०,०७ ५० । मै० ३५

यद्बर्हिः स्तृणाति मेध्यामेवैनां करोत्ये,—तावती वा इयं पृथिवी यावती वेदिः, प्रजा बर्हि,—यद्बर्हिः स्तृणात्यस्यां वा एतत् प्रजाः प्रतिष्ठापयति, यजमानो वै प्रस्तरः, प्रजा बर्हि,—यत्प्रस्तरमुत्तरं बर्हिषः सादयति यजमानं वा एतदुपरिष्टादासां प्रजानां दधात्य,—थ यत्तृणे अन्तर्दधाति तेन यजमानो यजमानेन व्यावर्तते, बहुलं बर्हिः स्तृणात्य,—क्षोधुका अस्य पशवो भवन्ति, प्राचीनं बर्हिः स्तृणाति, प्राङ् हि यज्ञो, यत्प्रतीचीनं स्तृणीयात् प्रत्याद्राज्यास्य राष्ट्रं घातुकं स्याद्, देवेषुवै वेदि,—र्यत्र वै देवेभ्यो संनतया कामयते तद्वन्ति, यद्वेदिं कल्पयति देवेषु वा एतत्संनमति, तया संनतया यत्र यजमानः कामयते तद्वन्ति, त्रयो वै पूर्वेऽग्नयः प्राधन्वन् हव्यं देवेभ्यो वहन्तो, वषट्कारः प्रावृश्च,—दथ ३योऽयमिदानीं स भीषा-पाद्रवदीदेगु स आरिष्यतीति, तं देवा अपाशासु,—रुप ना आवर्तस्वेति, सोऽब्रवीद्, भागो मेऽस्त्विवति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीत्, त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन् हव्यं देवेभ्यो वहन्तो, वषट्कारः प्रावृश्चत्तेषां भा३गोऽस्त्विवति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीद्, यदेव किंचाहुतं बहिष्परिधि स्कन्देत्तदेव तेषां भागधेयमसदिति, तेषां वा एतद्भागधेय,—म-स्थन्वन्तो हि वै त आस,—न्नथ ते प्राधन्व,—न्त्सोऽब्रवी,—दस्थानि नु धुविष्ये, ऽथोपाव-र्त्स्यामीति, तं वा अन्वायं,—स्ते सुमन्तं पर्यविशन् यज्ञस्य गोपीथाया,—ऽयं वाव यज्ञायो-पधीयते, ऽयं यजमानाया,—ऽयं भ्रातृव्याये,—मौ प्रतरं करोती,—मंमपतरं, यज्ञेन वा एतद्यजमानं प्रतरं करोति, यज्ञेनास्य भ्रातृव्यमपतरं करोति, संधि प्रतिजुहोति, न ३ह्यभि-माहुतिस्तरति, प्रस्तत एवैनान् प्रीणात्य,—थो सुतीर्थेन वा एतदाहुतीस्तारयत्य,—यं वाव भूपतिं,—रयं भुवनपतिं,—रयं भूतानां पतिं,—रथ ३योऽयमिदानीं स भूति,—यदाहुतं बहिष्प-रिधि स्कन्देत्तदभिमन्त्रयेत॥ भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा॥ इति भागधेयं वावैषामेतद्, प्रीणात्येवैना,—नथो हविषा वा एतत् स्कन्नेन द्वितीयामाशिषमवरुन्द्ध, एतद्ध स्म वा आहारुणं औपवेशिः, किमु स यज्ञेन यजेत यो हविषा स्कन्नेन द्वितीयामाशिषम-वरुन्धं न विद्यादिति, तद् द्वितीयामेवैतेनाशिषमवरुन्द्धे ॥ ६ ॥ १६-१८

ये पुरा ग्रन्थयो भवन्ति तान् विस्रंसयन्ति मानुषस्य व्यावृत्त्यै, प्रणेनिजति, यदेवैनयो-

---

[७] तै १,७,९। तै ६,२,९। काठ २५,८। कपि. ४०,१। वा ५,१४१८-२१,११,४,३७,२,५,। काण्व. ५,१९,२४-२७ १०,४,३७,२।

रभिर्निपणꣳ शमलममेध्यं तच्च शुन्धन्ति, युञ्जते मन उत युञ्जते धिय, इति जुहोति, युक्त्या एव, सावित्र्या जुहोति, सवितृप्रसूत एवं प्रवर्तते, हविर्वै हविर्धाने, यदुपानक्ति हविर्भूत एव प्रवर्तते, अथो अभिवृत्ते एव पत्न्युपानक्ति, यद्वै पत्नी यज्ञे करोति तन्मिथुनं, मिथुनत्वाय वै पत्न्युपानक्त्ये,—ष वै पत्न्या यज्ञस्यान्वारम्भो यद्यज्ञे करोत्य,—न्वारम्भाय वै पत्न्युपानक्ति, प्राचीनमुपानक्ति, प्राङ् हि यज्ञ,—स्त्रिरन्यत्त्रिरन्यदुपानक्त्य,—परिमितꣳ हि मनुष्या उपाञ्जन्ति, दक्षिणत उपानक्त्यु,—दीची २ह्येते मनुष्यलोकमुपावर्तेते, निर्ऋतिगृहीतो वा एष उभयतः संदष्टः शुष्को, यदुपानक्ति शर्मयत्येवं, शुष्को वा एष दुर्वाग्यजमानस्य गृहेमावदति, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—स्तदनुगृह्णन्तो यन्ति, यद्युत्स्वेदेत्, सुवागासद देव दुर्यानिति वदेच्, शर्मयत्येवा,—ऽथोऽशमयिस्वेवाशिषमाशास्ते, हविर्वै हविर्धाने, स्तीर्त्वा वै बर्हिर्हविरासादयन्ति, तस्मात् प्रस्तरꣳ स्तीर्त्वा प्रवर्तयन्ति, हविर्वै हविर्धाने, अनूच्यमानासु वै सामिधेनीषु हविरासादयन्ति, तस्मात् प्रवर्त्यमानयोर्होतान्वाहे,—मे वा एते, इमे वा एतत् प्रवर्तयन्ति यद्धविर्धाने, तस्मात् पूर्वस्या जनताया अपरा जनता क्षेत्रमभ्यारोहुका, तं यर्हि प्रवर्तयेयुस्तर्हि होतानुब्रुवन्मनसा पदा तां जनतां प्रतिनुदे,—दपजन्यं भयं नुदेति, विद्वां एषा, विशꣳ वा एतत् प्रतिनुदते, ऽनभ्यवचारुकास्य विट् क्षेत्रं भवति, नीयानꣳ वै रक्षाꣳसि यज्ञमन्वयन्ति, यद्वर्त्मनि जुहोति रक्षसामपहत्यै, वैष्णव्या जुहोति, विष्णुर्वै यज्ञो, विष्णुनैव यज्ञेन यज्ञाद्रक्षाꣳस्यपहन्ति, यद्गायत्र्या जुहोतीमां तेनाक्रमते, यत्त्रिष्टुभान्तरिक्षं तेना,—ऽथ यदाहवनीयं गच्छतः स्वर्गं तेन लोकं, त्रीन् प्रक्रमान् प्रतिविक्रमते, त्रयो वा इमे लोका, इमानेव लोकान् यजमानायोच्छिꣳषति, वैष्णवमसि, विष्णुस्त्वोत्तभ्नात्विति, वैष्णवꣳ हि हविर्धानं, दिवो विष्ण उत वा पृथिव्या, इति दक्षिणस्य हविर्धानस्य मेथीन्निहन्ति, मुखत एव यज्ञस्याशिषमवरुन्द्धे, यमध्वर्युः प्रथमं ग्रन्थिं ग्रथ्नाति तं प्रथमꣳ विस्रꣳसयति, यदन्यं पूर्वꣳ विस्रꣳसयेदमेहेन प्रमीयेत, विष्णोर्नु कꣳ वीर्याणि प्रवोचमित्युत्तरस्य हविर्धानस्य मेथीन्निहन्ति वैष्णव्या, वैष्णवꣳ हि हविर्धानꣳ, स्वयैव देवतया, यो अस्कभायदुत्तरꣳ सधस्थमित्य,—दो वा उत्तरꣳ सधस्थ,—ममुष्मिन्नेव हविर्धानꣳ संमिनोति॥
१९

[ युञ्जते मन उत०...। ऋ ५,८१,१, तै सं १,२,१३,१ ४,१,१,१, तै. आ ४,२,१ । दिवो (वा) विष्ण उत० ...। अथर्व ७,२६ ८ । विष्णोर्नु कं वीर्याणि० । ऋ १,१५४,१, अथर्व ७,२६ १, तै स १,२,१३,२। ]

*

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ २०
इति य एव देवा यज्ञियास्तान् हविर्धाना आसादयति, ताꣳ श्वो भूत्वेऽभिप्रजते,
दण्डो वा एतद्दौपरो वषट्कारेण निरहन्, यच्छर्दिरभिनिदधात्यपिहित्या अच्छिद्रत्वाय, विष्णोः
पृष्ठमसीत्य,—द एवं, विष्णो रराटमसीत्य,—द एवं, विष्णोः शिप्रे स्था, इतीमे एवं,
मुखतो वा एतत्, स्वया देवतया शिरो यज्ञस्य संभरति, विष्णोः स्यूरसीति, तस्मादिदꣳ
शिरः षोढा विष्कृतं, प्र तद्विष्णुः स्तवते वी३र्येणे,—ति प्राङुत्क्रम्य वदत्य,—तो वै विष्णुरिमां-
ल्लोकानुदजयद्, विष्णोरेवोज्जितिमन्विमाँल्लोकानुज्जयति, एभ्यो लोकेभ्यो भ्रातृव्यं नुदते ॥
॥ ७ ॥ २१
देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—
श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्यामिति, देवताभिरेवा,—ऽभ्रिरसि, नारिरसीति,
क्रूरमिव वा एतद्यदभ्रिः, शमयत्येवे,—दमहꣳ रक्षसो ग्रीवा अपिकृन्तामी,—त्याह रक्षसां
ऽपराध्यै रक्षसामन्तरित्या, इदमहꣳ सोमे समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्ता-
मीति, समानो वा ह्यसमानो वारातीयति सर्वमेवैतया पर्यापत्, प्राणा वा उपरवाः, शिरो
हविर्धानꣳ, शीर्षन्वा इमे प्राणा,—स्तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् प्राणा,—स्तस्माद-
न्त,—श्चत्वारो वा इमे शीर्षन् प्राणा,—स्तस्माच्चत्वारः संतृणाः परः, संतृणा हि परः प्राणा,
विधृता उपरिष्टाद्, विधृता ह्यमी उपरिष्टात् प्राणाः, पूर्वार्धे वा इमे मुखस्य प्राणा, एतत्
खलु वै हविर्धानस्य पूर्वार्धꣳ यद्दक्षिणꣳ हविर्धानं, तस्माद्दक्षिणे हविर्धाने, बृहन्नसि बृहद्रावा
इति, देवा ह्येवं बृहद्, बृहतीमिन्द्राय वाचꣳ वदेत्यै,—न्द्रो हि यज्ञो, रक्षोहणꣳ वलगह-
नमित्या,—ह रक्षसां ऽपराध्यै रक्षसामन्तरित्यै, वैष्णवीमिति, विष्णुर्हि यज्ञो, ऽसुरा वा
एतान् वलगान् देवेभ्यः प्राणेषु न्यखनꣳ,—स्तान् बाहुमात्रेऽन्वविन्दꣳ,—स्तस्माद्बाहुमात्रे
खेयꣳ, यद्वावै कृत्या यच्च शफꣳ यदभिचरितं तदेतदुद्वपति, प्राणा वा उपरवा, यदव-

[ आ वामुपस्थमद्रुहा० पीतये। ऋ २,४१,२१, नि ९,३७। प्र तद्विष्णुः स्तवते० विभ्वा। ऋ १,१५४,२, अथर्व ७,२६,२—३, तै ब्रा २,४,३,४, नि १,२० ]

[ ८ ] मै १,२,१०। तै ६,२,१०—११। काठ २५,९। कपि ४०,२। वा ५,२२—२३,२५—२८,६,१,३। काण्व ५,२८—२९,३१—३६,६,१,४। [ देवस्य त्वा सवितु०। अथर्व १९,५१,२ ]

सिञ्चति तस्मादिम उदन्वन्तः प्राणाः, प्राणा वा उपरवा, यदवस्तृणाति तस्मादिमे लोमशाः प्राणा, अथ यदवसिञ्चत्यव च स्तृणाति मस्तिष्को वा एष क्रियते, हनू अधिषवणे, शिरो हविर्धानꣳ, शीर्षन्वा इमे हनू, तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् हनू, तस्मादन्तरिमे वा एते यत्संतृन्द्या,–दिमे एवं संतृन्द्यात्, तत्संपाद्य एवं, अङ्गुलमन्तरा कार्यं, अङ्गुलꣳ ३हीदं,–मन्तरा वै नासिके, शिरो हविर्धानं, पृष्ठमाग्नीध्र,–मुदरꣳ सदः, प्राङ् हि यज्ञः सꣳहितो, हनू अधिषवणे, जिह्वाधिषवणं, ग्रावाणो दन्ता, मुखतो वा एतत् प्रजापतेः सोमं पिबन्ती,–न्द्रो वै वृत्रमह,–न्त्स इमां प्राविशत्, तं देवताः प्रैषमैच्छꣳ,–स्तन्नाविदꣳ,–स्तं भूतान्युपारवन्त, यो नोऽधिपतिरभूत्तन्न विन्दाम इति, तदुपरवाणामुपरवत्वꣳ, यत्त-दुपारवन्त तच्चतुर्धावस्तादवैच्छ,–न्नेकधा पुरोऽन्वविन्दꣳ,–स्तस्माच्चतुर्धावस्ता,–देकधा पुरो, यदुपरवाननुमृशती,–न्द्रियस्यावरुद्ध्यै ॥ ८ ॥ २२

पृथिव्यै त्वा, ऽन्तरिक्षाय त्वा, दिवे त्वे,–ति प्रोक्षत्ये,–भ्य३ एषा लोकानाꣳ विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो त्रयो वा इमे लोका, एभ्य एवैनां लोकेभ्यः प्रोक्षी,–दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमतीभिः प्रोक्षत्यूर्जा वा एतदन्नꣳ सम-र्धयत्य,–क्षꣳ वा अमेध्य,–मापो हवि,–र्यदवसिञ्चति मेध्यमेवैनत् करोत्य,–क्षꣳ वा अमे-ध्यꣳ, यदवस्तृणाति मेध्यमेवैनत् करोति, पितृदेवत्यꣳ वै निखातममेध्यमन्यदेवत्य,–मस्याः खलु वा इमा उत्तमार्धे ओषधयो, यदवस्तृणात्यस्या एवैनामुत्तमार्धे मिनोत्य,–निखातैवा-भू,–दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमवास्यत्यन्ने वा एतदन्नं दधाति, न ह्यन्नमृत ऊर्जो धिनोति, नो ह्वर्गतेऽन्नाद्विनोति, निखानस्त्वा मारुतो निहन्त्विति, मनो वै नितानः, प्राणा मारुता, मित्रावरुणा ध्रुवेण धर्मणेति, मित्रमेवैनां दाधार, वरुणः कल्पयति, विधृत्यै च खलु वा एषा प्रजानां कॢप्त्यै च मीयते, मित्रावरुणौ वै देवानां धर्मधारयौ, दैवꣳ वा एतद्धर्ममदीधरताꣳ, यदौदुम्बरी, ब्रह्मवनि त्वा क्षत्रवनि पर्यूहामीत्या,–शीरेवैषा, ब्रह्म दृꣳह क्षत्रं दृꣳहेत्या,–शिषु एवैष परिग्रहो, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावा-पृथिवी व्युनत्त्यु,–दरꣳ वै सदा, ऊर्गुदुम्बरो, यदौदुम्बर्यू,–र्जꣳ वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, प्रजापतेर्वा एतदुदरꣳ यत्सदः, प्राजापत्य उद्गाता, तस्मादुद्गातान्वारभते,

[९] मै ३,८,१२। तै ६,२,११। काठ २५,१०। कपि ४०,३ श ५ ७६,७८ ६,१,१६। क ७ ५,३३,३६ १,७२।

यजमानो वा, औदुम्बरी वर्षिष्ठा कार्या, वर्ष्मैनꣳ समानानां गमयति, विश्वजनस्य छायासी,—ति छदिरभिनिदधाति, गोत्राद्गोत्राद्धि प्रसर्पन्त्य,—दरꣳ वै सदो, यदन्येनान्येन संमिनोति तस्मादुदरमन्यैनान् येनामेन संतत, उदरꣳ वै सदो, यदनूचीनं मिनुयात्पराचीनं जग्धमेतीया,—दथ यत्तिरश्चीनं मिनोति तस्माज्जग्धꣳ, सर्वाण्यङ्गान्यनुवैति, प्रजा वा एतत् सुमीचीनं मिनोति, सुमीचीरेनं प्रजा अभिसमावर्तते, सꣳयात इव स भवति, समानꣳ सांकाशिनं कार्यꣳ, समानौ ह्यीमे प्राणा, यं द्विष्यात्तस्याक्ष्णया मिनुयात्, प्राणानस्य मोहयति, प्रमायुको भवति, यदि कामयेत, वर्षेत् पर्जन्या इति, नीचैः सदो मिनुयाद्, वृष्टिमेव नियच्छति, यदि कामयेत, न वर्षेत् पर्जन्या इत्य,—च्चैः सदो मिनुयाद्, वृष्टिमेवोपाग्रही,—न्नवच्छदिरग्निष्टोमे स्यात्, तेजसा त्रिवृता संमितं, पञ्चदशच्छदिरुक्थ्ये, पञ्चदशेन वज्रेण संमितꣳ, सप्तदशच्छदिरातिरात्रे, सप्तदशो वै प्रजापतिः, प्राजापत्या रात्रिरानुष्टुभी, यज्ञक्रतूनामेवैषा व्यावृत्तिः, प्राचीनवꣳशꣳ हविर्धानं मिनोत्यू,—र्ध्वा हि द्यौः, प्राचीनवꣳशमाग्नीध्र,—मूर्ध्वꣳ ह्यन्तरिक्षं, तिरश्चीनवꣳशꣳ सद,—स्तिरश्चीव ह्यीयꣳ, यजुषा हविर्धानं मिनोति, निरुक्ता हि द्यौ,—र्यजुषा सदो, निरुक्ता ह्यीय,—मयजुषाग्नीध्र,—मनिरुक्तमिव ह्यन्तरिक्ष,—मर्धमाग्नीध्रस्यान्तर्वेदि मिनोत्य,—र्धं बहिर्वेद्य,—र्धꣳ ह्यन्तरिक्षस्यास्मिल्लोक, ऽर्धममुष्मिन् ॥९॥
२३

सुवाड्नभ्राडङ्घारे बम्भारा इत्य,—ते वै देवानाꣳ सोमरक्षय, एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳ,—स्ते सोमपीथेन व्यार्ध्यत, त एतानि द्वितीयानि नामान्यधत्तमङ्गलेछायै, सोमपीथो ना उपनमादिति, तस्मादेते द्विनामान,—स्ते वा अन्वायꣳ,—स्ते न प्राप्नुवꣳ,—स्तस्मादेतेऽतिहाय वषट् क्रियन्ते, न हि प्राप्नुवꣳ,—स्तेषाꣳ वा एष लोको यावदभि न्युप्यते, तद्योऽविद्वानाक्रामत्यार्तिमार्छत्य,—थ य एवꣳ विद्वानाक्रामति न सुदरस्यामार्तिमार्छति, तेषाꣳ वा एष भागो यन्नाघार्यन्ते, त एवास्मै तेनाभीष्टाः प्रीता भवन्ति, यज्ञमुखꣳ वै यजमानो, यत्पवमाने स्तुतेऽमेभ्यो निहियन्ते यज्ञमुखादेवाधिविह्रियन्ते, जम्भो वै नामासुर आसीत, स यज्ञमगिरत्, स आग्नीध्रं न प्राप्नोत्, तमाग्नीध्रात्पुनर्न्यरुज,—देतद्ध जीवं, तस्मादाग्नीध्राद्विह्रियन्ते, दक्षिणतो वै देवानसुरा यज्ञमजयꣳ,—स्त उदञ्चा आग्नीध्रꣳ समातिष्ठꣳ,—स्तमाग्नीध्रात् पुनरभ्यजय,—न्नेतद्वा अनभिजितं, तस्मादाग्नीध्राद्विह्रियन्त, एतद् प्रति वै देवानसुरा यज्ञ-

---

[ १० ] तै ६,३,१। क ठ २६,१। कपि ४०,४। श. ५,३१। काप[illegible]।

अथ नवमः प्रपाठकः ।

यज्ञा वा एष संक्रामन्नेति प्रायणीयादध्यातिथ्यं,—मातिथ्यादध्युपसदः, स उपसद्भ्योऽधि प्राङ् प्रणीयते, यदगृहीत्वाज्यानि प्रणयेयुरपन्नीत यजमानं,—मथ यद्गृहीत्वाज्यानि प्रणयन्ति यज्ञं वा एतद्यजमानोऽन्वारभते, प्राञ्चः सोमेन प्रयन्ति, प्राची पत्नी पूर्वमाग्निमभ्युदैति, सोमेन वा एतद्राज्ञाभिजयन्तो यन्ति, यस्य वै मनुष्यराजो गृहमागच्छति तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रायतेऽथ तेषां तत्पुनर्भवति, तस्मादाहुरपित्रता इत्यं,—पि ह्येषां तस्मिन् व्रतं, सोमो वा एतद्राजा गृहं प्राप, तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रच्यवतेऽथ स तेभ्यो विसृजते, तद्वैसर्जनानां वैसर्जनत्वं, त्वं सोम तनूकृद्भ्य इति, यदेव तनूकृतं चान्यकृतं चैनस्तदेतेनावयजति, द्वाभ्यां गार्हपत्ये जुहोति, द्विपाद्यजमानः प्रतिष्ठित्या, आग्नेय्याग्नीध्रे, ऽन्तरिक्षमेवं प्राप्यान्यदेव रूपमकं,—वैष्णव्या हविर्धाने, ऽद एवं प्राप्य, विष्णुर्वै यज्ञो, विष्णुमेवं यज्ञमकं,—रसुरा वा एतं देवानामादित्सन्त, तं देवा असुं कृत्वामुं लोकमहरन्, यदसुमत्या जुहोत्यसुमेवैनं कृत्वामुं लोकं हरन्ति, सर्वेभ्यो वा एष भूतेभ्य आह्रियते, यत्सौम्या जुहोति मनुष्येभ्यस्तेनाह्रियते, यदसुमत्या पितृभ्यस्तेन, यदाग्नेय्या देवेभ्यस्तेन, यद्वैष्णव्या यज्ञाय तेन, सर्वा वा एतत् प्रजा वरुणो गृह्णाति, यत् सौम्या जुहोति मनुष्यांस्तेन वरुणान्मुञ्चति, यदसुमत्या पितॄंस्तेन, यदाग्नेय्या देवांस्तेन, यद्वैष्णव्या यज्ञं तेन, सर्वा वा एतत् प्रजा वरुणान्मुञ्चत्यग्निना वै मुखेन देवा इमाँल्लोकानभ्युजनयन्, गार्हपत्येनामुं लोकं,—माग्नीध्रेणान्तरिक्ष,—माहवनीयेनामुं लोकं, तस्मात् त्रेधा अग्नय आधीयन्त एषां लोकानामभिजित्या, इन्द्राग्नी वा अपरा अग्नी, अग्निरपरा, इन्द्रः पूर्वः, प्रजापतिराहवनीय,—स्तस्मादेष उपांशु सायता, उत्तरो हि पिता पुत्रा,—दुत्तरो भ्रातृव्याद्भवति य एवं वेदा,—ऽग्रेण प्रणयेद्बलवर्थाः श्रिय एवं परिगृहीत्यै, सौम्यो वै ब्राह्मणो देवतया, स्वयैव देवतया, प्रजा वै पशवोऽग्नयो, रुद्र आहवनीयो, यदग्रेण प्रणयेद्रुद्रायास्य पशूनपिदध्यात्, पश्चादेव प्राङ् प्रणीयः पशूनां गोपीथायो, उर्वन्तरिक्षं उवीहीत्य,—न्तरिक्षदेवत्यो वा एष एतर्हि, प्रच्युत इतोऽप्राप्तोऽमुतो,—ऽऽदित्याः सद आसीदेत्या,—दित्यो वै यज्ञो, ऽदितिः सोमस्य योनिः, स्व एवैनं योना दधाति, देव सवितरेष ते सोम इति, मनुष्येषु वा एष पुराभूद्, देवेभ्य एवैनं संप्रादा,—देतत्त्वं देव सोम देवानुपागा इति, देवा

---

[ १ ] मै ३,२,१३। तै ६,३,३। क.ठ. २६,२। कपि ४०,५। श ३,६,३,१९-४०,२,७। कात्या ५,४४,४८-५०,२,१०।

ऽह्येव देवाननुपावर्तेतेव, इदमहं मनुष्यान्त्सह रायस्पोषेण प्रजया चोपावर्तत इत्याशिषमेवाशास्ते, नमो देवेभ्यः स्वधा पितृभ्य इति, नमस्कारो देवानाꣳ, स्वधाकारः पितॄणां, निर्वरुणस्य पाशादमुक्षीति, वरुणपाशादेव निर्मुच्यत आत्मनोऽहिꣳसायै स्वरभिव्यख्यशमिति, यज्ञो वै स्व, यज्ञमेवाभिविपश्यति, ज्योतिर्वैश्वानरमित्य, सौ वा आदित्यो ज्योतिर्वैश्वानरो, ऽग्निना वा एष तन्वꣳ विपरिधत्ते यो दीक्षते, ऽग्नी रुद्रो, यदग्निना पुनर्यथायथं तन्वं न विपरिदधीत रुद्र एनमभिमानुकः स्याद्, यदाहा, ऽग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा त्वयि, यो मम तनूस्त्वय्यभूदियꣳ सा मयीत्य, ग्निना वा एतत् पुनर्यथायथं तन्वꣳ विपरिधत्त आत्मनोऽहिꣳसायै ॥ १ ॥ १

न यूपमच्छैष्यता होतव्यं, न हि दीक्षितस्याग्नौ जुह्वति, वैष्णवीमनूच्याच्छैत्यो, वैष्णवो हि यूप, स्तदाहु, र्होतव्यमेव, परुष्येव जुहोत्यायतना इति, तन्न सूर्क्ष्यꣳ, यूपस्यैवान्तेऽग्निमुधित्वाथ होतव्यं, तस्मिन्नुभयमक, र्जुहोत्याह, न दीक्षितस्याग्नौ जुहोत्य, थान्यानगां, नान्यानुपागामित्य, ती ह्यन्यानेति, नान्याननुपैत्य, र्वाक् त्वा परेभ्यः परोऽवरेभ्योऽविदमित्य, र्वाग्घ्येनं परेभ्यः परोऽवरेभ्यो विन्दति, तं त्वा जुषामहे देवयज्याया इत्ये, तꣳ ह्येष जुषते, जुषꣳ विष्णव इति, यज्ञायैवैनं जुषꣳ विष्णवेऽक, र्विष्णवे त्वे, ति पर्युनक्ति, हविर्भूतमेवैनꣳ वृश्चत्य, थो अभिघृतमेवं, य इत्थꣳ वेत्थेत्याहु, र्णो मेधाऽपत्तोऽपावृत्तो, य ऋजुरूर्ध्वशल्कः स वाव मेधमुपस्थितो, य ऋजुरुपरिष्टादुपावनतो, योऽधिशाख्यो योनिः स, यो वा अस्या अधिजायते स योनि, र्मानियꣳ हि वनस्पतीनाꣳ योनिः, परुपि व्रश्च्यो, यद्वपरुपि वृश्चेद्यथा परुष्यवकृत्तमेवꣳ स्या, दनक्षसंगꣳ स्थाणुरुच्छिष्यो, यदक्षसंगꣳ स्थाणुमुच्छिꣳषेद्वज्रो भूत्वा यजमानस्य पशून् प्रतिहन्यात्, पञ्चारत्निः कार्यः, पङ्क्त्या संमितः, षडरत्निः कार्य, ऋतुभिः संमितः, सप्तारत्निः कार्यः, सप्तपदया शक्वर्या संमितो, ऽष्टारत्निः कार्यो, गायत्र्या संमितो, नवारत्निः कार्यस्, तेजसा त्रिवृता संमितो, दशारत्निः कार्यो, विराजा संमिता, एकादशारत्निः कार्यः, त्रिष्टुभा संमितो, द्वादशारत्निः कार्यो, जगत्या संमित, स्त्रयोदशारत्निः कार्य, स्त्रयोदशेन प्रजापतिना संमितः, पञ्चदशारत्निः कार्यः, पञ्चदशेन वज्रेण संमितः, सप्तदशारत्निः कार्यः, सप्तदशेन प्रजापतिना संमित, एकविꣳ-

[ २ ] मै. १,२,१४ । तै. ६,३,३ । काठ २६,३—४ । कपि ४१,१—२ । वा ५,४२ । काण्व ५,५२—५३ ।

शत्यरत्निः कार्यं, एकत्रिंशेन संमित,—स्त्रयोविंशत्यरत्निः कार्यं,—स्त्रयोत्रिंशेन संमितः,
पञ्चविंशत्यरत्निः कार्यः, पञ्चविंशेन संमितः, सप्तत्रिंशत्यरत्निः कार्यं,—स्त्रिणवेन
संमिता, एकत्रिंशदरत्निः कार्यं, एकत्रिंशेन संमित,—स्त्रयस्त्रिंशदरत्निः कार्यं,—स्त्र-
यस्त्रिंशेन संमितो, यावान् पुरुष ऊर्ध्वबाहुस्तावान् कार्यो यद्वि वा यावान् रथे तिष्ठन्,
यावान् वै पुरुष ऊर्ध्वबाहुः संतस्यानुमा मात्रा, ऽथ ततो वर्षीयान्वर्षीयानेव कार्यो, यो
बहुशाखो बहुपर्णः स कार्यो भूम्न एव, भूमानं ह्येष एतस्य जग्राह, भूमानमस्य गृह्णाति,
भूमानमस्य पशवोऽनूपतिष्ठन्ते ॥ २ ॥ २

ओषधे त्रायस्वैनमित्याह त्राता एव, स्वधिते मैनं हिंसीरिति, वज्रो वै स्वधिति,-
—र्वज्राद्वा अस्मा एतदन्तर्दधात्यहिंसायै, यो वा एतस्याभिहतस्याग्रे शकलः परापतति तमस्य
तेजोऽन्वपक्रामति, यत्तं पुनराहरति सतेजस्त्वाय, प्राञ्चं प्रहापयति, मेध्यमेवैनमनुपर्यावर्त-
यति, वज्रो वै यूप,—स्तस्माद्वा इमे लोका नीयमानाद्बिभ्यती,—रीश्वरो ह्येषोऽशान्तो नीयमान
इमाँल्लोकान् हिंसितो,—र्यदाह, दिवमग्रेण मा हिंसीरन्तरिक्षं मध्येन पृथिव्याः संभवेति भ्राजं
गच्छेति, शमयत्येवै, शान्त एनं नीयते, एषां लोकानामहिंसायै, सर्वस्य वा एष मित्रं
यो दीक्षितः, स एतमहिंसी,—दीश्वरो वनस्पतयोऽपिधिष्ण्यं भवितो, यदाव्रश्चने जुहोति
पुनरेवैनं प्रजनयति, तस्मादाव्रश्चनाद्वृक्षाः प्रजायन्ते, पशुना संमितः कार्यो, दश वै
पशोः प्राणा, आत्मैकादशो, ऽष्टाश्रयो ब्रह्मणी दशमे, आत्मैकादश,—स्तथा पशुना
संमितो, ऽष्टाश्रिः कार्यो, गायत्र्यां रूपं, गायत्रो हि यूपो, गायत्र्या वै पतन्त्या यत्
पर्णं परापतत्ततः पर्णोऽजायत, तस्मात् पर्णमयः, एतद् खलु वै पर्णस्य सारं यत्खदिरं,—
स्तस्मात् खादिरे, इह वा असा आदित्य आसीत्, तमितोऽध्यमुं लोकमहरं,—स्तद्यतोऽध्यमुं
लोकमहरंस्तस्माज्ज्योतिषो बिल्वोऽजायत, तस्माद्बैल्वो, ब्रह्मवर्चसकामेन कार्यो ब्रह्मवर्चसस्य
संमृष्ट्या, अथो ज्योतिषैव तमस्तरती,—न्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायच्छत्, तेषां वा
एषं ब्रह्मचारी चमसाध्वर्युरासीद्, योऽयं हरिणस्तस्य यः सोमपीथ आसीत् स स्वजोऽभवत्,
तस्माद्धरिणः स्वजं खादति, सोमपीथो ह्यस्यैष सं, यत्र चमसं न्यौब्जत्ततो रोहितकोऽजायत,
तस्माद्रौहितकं,—स्तस्माद्रौहितके रौहितके स्वजः, पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वे,—ति
प्रोक्षत्ये,—षां ह्येषं लोकानां विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो

[ ३ ] म १,२,१४ । तै ६,३,३ । काठ २६,३ । कपि ४१,१ । श ३,६,१७,५,१२-२७,४२—४३,६,१-४,१५।
२७ ११,१,१७—१८ । काप. ४,२,२३,५,११,१५—१६,५४,६,१—५,२७,११,१,१८—१९,२३,३३ ।

त्रिपदयैवैनं गायत्र्या प्रौक्षीद्, वज्रो वै यूपो, ऽन्नं यवो, यद्यवमतीभिः प्रोक्षति वज्रेण वा एतदन्नं जयति, तेजो वै यूप, एषं खलु वा ओषधीनां तेजो यद्यव,—स्तस्मादेतं शिशिरा ओषधयोऽनुप्राणन्ति, यद्यवमुपवास्यति तेजसि वा एतत्तेजो दधात्य,—क्षं वा अमेध्यं,—मांषा हविः,—र्यदवसिञ्चति मेध्यमेवैनत्करोत्य,—क्षं वा अमेध्यं, यदवस्तृणाति मेध्यमेवैनत्करोति, तक्षितो वा एष नग्नो यच्चषालमवास्यत्य,—नग्नमेवैनमकः, स्व एवैनं स्थाने दधात्य,—वृकण एवाभूद्, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावापृथिवी आपूरयति, यजमानो वा अग्निष्ठास्तेजो घृतं,—मान्तमविच्छिन्नमनक्ति, यजमानमेव तेजसानक्ति, देवस्त्वा सविता मध्वानक्त्वित्य,—तद्धि देवानां मधु यद् घृतं, सुविरूपप्लत एवैनं मध्वानक्ती,—न्द्रस्य चषालमसीत्य,—न्द्रं हि चषालं सुपिप्पला ओषधीस्कृधीत्यो,—षधीरेव फलं ग्राहयति, तस्मादोषधयः शीर्षन् फलं गृह्णन्ति, दिवमग्रेणास्तभाना,—ऽन्तरिक्षं मध्येनापृण, पृथिवीमुपरेण दृंहत्ये,—षां ह्येष लोकानां विधृत्यै मीयते, ता ते धामान्युश्मसि गमध्या, इत्यपोदधाति वैष्णव्या, वैष्णवो हि यूपः, स्वयैव देवतया, विष्णोः कर्माणि पश्यते,—ति संकल्पयति संमितत्वाय, ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामी,—त्याशीरेवैषा, ब्रह्म दृंह क्षत्रं दृंहेत्या,—शिषु एवैषु परिग्रहो, ऽपोऽनुदरिषिञ्चति धृत्यै ॥ ३ ॥ ३

वज्रो वै यूपो, यदन्तर्वेदि मिनुयान्निर्दहेद्, यद्बहिर्वेद्यनवरुद्धः स्या,—दर्धमन्तर्वेदि मिनोत्य,—र्धं बहिर्वेद्य,—वरुद्धो ह भवति, न निर्दहति, नोपरस्याविः कर्तवै, यदुपरस्याविः कुर्यात्प्रवेष्टोः स्यात्, प्रमायुको यजमानो, नातिस्थूलः कार्यः, क्षुधं प्रजा नीयु,—र्नो अत्यणु,—रुभयमेवान्तरा, यज्ञेन वै देवाः स्वर्गं लोकमायं,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वारोक्ष्यन्तीति, तं यूपेनायोपयं,—स्तद्यूपस्य यूपत्वं, यद्येषः पुरस्तान्मीयेत स्वर्गस्य लोकस्यानुख्यात्यै, तद्विष्णोः परमं पदं,—मिति समुन्मार्ष्टि स्वर्गस्य लोकस्य समष्ट्यै, नाभिदघ्नं परिव्ययत्यू,—र्गा ओषधय, ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, यदि कामयेत, क्षुधं प्रजा नीयुरित्य,—वाचीनान्यूपानिमिनुयात्, क्षुधं प्रजा

---

[ ता ( या ) ते ( वां ) धामान्यु ( वास्तू० )० । ऋ. १,१५४,६. तै. ब्रा. १,२,३,१; नि. २,७ । विष्णोः कर्माणि पश्यत० । ऋ. १,२२,१९; मा ६।४, अथर्व. ७,२६,६, तै. सं. १,३,६,२ ]

[ ४ ] मै. १,२,१४ । तै. ६,३,४ । काठ. २६,६ कपि ४१,४ । श. ३,७ । कात्या ६,३ । [ तद्विष्णोः परमं पदं० । ऋ १,२२,२०, मा ६।५, अथर्व ७।२६,७; तै सं. १,३,६,१;४,२,९,३ ]

नियन्ति, यदि कामयेत, वर्षेत् पर्जन्य, ऊर्जा यजमान२ समर्धयेयमिति, परिवीयोर्ध्वामुदूहेद्, वृष्ट्या एवेमां न्यूहत्यू,—र्जा यजमान२ समर्धयति, यदि कामयेत, न वर्षेत् पर्जन्य, ऊर्जा यजमान२ व्यर्धयेयमिति, परिवीयावाचीमवोहेद्, वृष्टिमेवेमां न्यूहत्यू,—र्जा यजमान२ व्यर्धयति, सर्वदेव३त्यो वै यूपो, यन्निखातं तत् पितॄणा२, यदूर्ध्वं तन्मनुष्याणा२, यत्र रशना तदोषधीना२, यदूर्ध्व२ रशनाया आ चषालात् तद्विश्वेषां देवाना,—मिन्द्रस्य चषाल२, ये वै देवाः साध्या यज्ञमत्यमन्यन्त तेषा२ वा एतद्यदुपरिष्टाच्चषालस्याङ्गुलिमात्रं कार्य,—मङ्गुलिमात्र२ हि तदग्र आसीद्, यच्चातो वर्षीयः कुर्याद्वज्रो भूत्वा यजमानस्य पशूननुतिष्ठे,—दिन्द्रो वै वृत्राय वज्रमुदयच्छत्, सोऽम्लीयत, तस्य वा एतदनुनद्ध्यै यच्चषालं पृथुमात्रं कार्य,— पृथुमात्र२ हि तदग्र आसीद्, यदणिमतोऽगृह्णात् तस्मादणिमतो, यदिन्द्र उदयच्छत् तस्मादिन्द्र२, यदि कामयेता,—न्येऽस्य लोकमन्वारोहेयुरित्य,—न्यस्य वृक्षस्य स्वरुं कुर्या,—दन्येऽस्य लोकमन्वारोहन्ति, यदि कामयेत, प्रजामनुसंतनुया,—दिति यूपस्य स्वरुं कुर्यात्, प्रजामेवानुसंतनोति, यजमानो वा अग्निष्ठा,—स तेजोऽग्नि,—र्यदित्थ२ वेत्थ२ वा मिनुयाद्यजमानं तेजसा व्यर्धये,—दग्निना सदृशं मेत३व्या यजमानस्य सतेजस्त्वाया,—ऽऽवृश्च ह स्म वै पुरा सं२स्थिते य-३ज्ञेऽग्नौ यूपं प्रास्यन्ति, संभजथ स्रुचस्ते देवा अमन्यन्त, यज्ञवेशसमिदं कुर्म इति, तेऽब्रुवन्, परिधिभिर्नः स्रुचः स्वगाकृताः सन्तु, स्वरुणा यूपः, प्रस्तरेण सदा इति, तेषा२ वा एष स्वगाकारो, न ह स्म वै पुरा पुरुषं महादेवो हन्ति, तत् रुद्र२ रु३द्रोऽन्ववातिष्ठत्, ते देवा एता२ रुद्रस्यातिष्टिमपश्य२,—स्त्रिः पुरस्तादनक्ति, त्रिरुपरिष्टात्, तत्षट्, षड्वा ऋतव, ऋतुभ्यो वा एतद्रुद्रमवयजत्य,—ऋतिभाजो वा ऋतवोऽस्तोमभाज,—स्त एवास्यैतेनाभीष्टाः प्रीता भवन्ति, यत्पृषदाज्यं जुहोति वनस्पतिभ्यस्तेनावयजति, यद्रशनाया ओषधीभ्यस्तेन, यदात्मनो मनुष्येभ्यस्तेन, यदाह, दिवं ते धूमो गच्छत्विति, हविर्धानात्तेना,—न्तरिक्षं ज्योतिरित्या,—ग्नीध्रात्तेन, पृथिवीं भस्म स्वाहेति, सदसस्तेन, सर्वतो वा एतद्रुद्रमवयजत्य,—ग्न्या वा एत२ वनस्पतिभ्यः प्रत्यावेशयन्त्य,—थ यन्मनु३ष्याः प्रयन्ति, तत्स्वाया देवताया अन्तर्धीयते, यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यं यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत, तस्माद्यूपो नोपस्पृश्यः, शुचा एषं भीयते, न ईश्वरोऽस्मान्न इमा श्रियोऽस्य शुचार्पयितो,—यं-वेदः स्यात् ॥ एवं तु यामो ॥ इति ब्रूयाद्, यदि वदेयुः ॥ एवं तु यामो ॥ इति ब्रूयाद्, शाखिनोऽ वै स्वरवः, स्वावेभ्यो देवतामभिसृजत्येषां लोकानामभिख्यात्यै, यथा वै प्रांशु२

रज्जुभिर्व्युत्तमेवमिमे लोका यूपव्युत्ता,—स्त एनमार्ति निनयन्ति, यदाह ॥ नमः स्वरुभ्यः ॥ इति, तेभ्य एव नमोऽक,—स्तेऽस्मै विजिहते, तेऽस्मै लोकं विन्देन्त्ये,—ते वै देवानामृड-यावा अस्मिल्लोके सन्नाः स्वरवोऽभिरोद्धारो, यान्न पश्यति ते सन्ना, अथ यान्पश्यति वै वृहन्त ऊर्जा, यदाह ॥ नमः स्वरुभ्यो वृहद्भ्यो मारुतेभ्यः, सन्नान्मावगाम् ॥ इति तानेव परिवृणक्त्ये,—ते वा अमुष्मिल्लोकेऽन्नस्य प्रदातार,—स्तेऽस्मा अन्नं प्रयच्छन्ति ॥ अपश्चाद्दघ्वान्नं भूयासम् ॥ इत्यपश्चाद्दघ्वान्नं भवति ॥ ४ ॥ ४-१४

साध्या वै देवा आस,—न्नथ वै तर्हि नान्याहुतिरासीत्, ते देवा अग्निं मथित्वाग्ना अजुहवु,—स्ते वै तयैवाहुत्या पशूंन्त्सृष्ट्वाथ पशुमालभन्त, यदग्निं मथित्वाग्नौ जुहोति तया वा एतदाहुत्या पशूंन्त्सृष्ट्वाथ पशुमालभन्ते, ऽथो पशवो वा एतदालब्धा यद्देवतां जनयन्त्य,—थो तेज एवास्मै जनयन्त्य,—ग्नेर्जनित्रमसीत्या,—यतनमिव एतत्क्रियते, वृषणौ स्था इति, रेत एवैतद्दधाति, न हि तस्य रेतो धीयते यस्यैतौ न भवत, उर्वश्यसीति, वाग्वा उर्वशी, पुरूरवा असीति, प्राण एव तन्मिथुनं,—मायुरसी,—ति समनक्ति, तस्मिन्नेव मिथुने रेतो दधाति, गायत्रमसि, त्रिष्टुबसि, जगदसीति, छन्दोभिरेवैनं प्रजनयति, सावित्रीं प्रथमामन्वाह प्रसूत्यै, सवितृ-प्रसूता हि प्रजाः प्रजायन्ते, ऽथ द्यावापृथिवीया,—मपि हि द्यावापृथिव्योः पशुषु, द्यावापृथिवी हि पशवोऽनुप्रजायन्ते, गायत्रीरन्वाह, गायत्रो३ ह्यग्नि,—र्गायत्रं छन्दा, अपरिमिता अन्वाहा,—ऽपरिमिता ३ ह्यग्नेस्त ३ न्वो, ऽग्निना वा अनीकेनेन्द्रो वृत्रमहं२,—स्तस्य समासमस्य भीतस्य यत्र व्यार्च्यत ततो भूम्नोऽसृज्यत, तस्मादुमैवृती नानूच्या, व्यृद्धा हि सा, रक्षसामनन्ववजयाय, परिधयः परिधीयन्ते, यत् समर्या परिधीन्प्रहरेत्तदनु रक्षांसि यज्ञमनुजये-यु,—रग्रेण परिधयः प्रहृत्या रक्षसामनन्ववजयाय, क्रूरमिव वा एतद्यज्ञे क्रियते यदग्ना अग्निं जुहुति, यदाह, भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति, शमयत्येवैनं, शान्त एव प्रह्रियते यजमानस्याहिंसायै, स्रुवेणाभिजुहोति, संजग्मानाभ्यामेवाभ्यां भागधेयं-मपिदधाति, यः कूटो वाकर्णो वा काणो वा शुष्को वावर्तत तस्य यातयामा, स योऽपन्नद-न्मलं तत्पशूना,—माग्नेयः पशु,—रग्निष्टोम आलभ्य, आग्नेयो ह्यग्निष्टोम, ऐन्द्राग्नः पशुरुक्थ्य आलभ्य, ऐन्द्राग्नानि ३ ह्युक्थ्यान्यै,—न्द्रो वृष्णिः षोडशिन्यालभ्य ऐन्द्रो वै वृष्णि,—रैन्द्रः

[५] मै १,२,७ । तै ६,३५ । क ३६७-८ । कपि ४१,५ । वा ५,२-३,१०६० । काण्व ५,०-३,११,६१ ।

षोडशी, सारस्वती मेष्यु,—विरात्रे आलभ्या, वाग्वै सरस्वती, वागनुष्टु,—वानुष्टुभी रात्रि,—यज्ञक्रतूनामेवैषा व्यावृत्ति,—यथा वै मत्स्योऽविचितो जनमवधूनुत एवं वा एते प्रजायमाना जनमवधून्वते, यस्त्वा एतानेवं वेद तमेतेनावधून्वते, कथं सवनानि पशुमन्ति वेत्थे,—ति पृच्छेद्, यद्वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमद्, यत्पुरोडाशैर्माध्यंदिने सवने तेन माध्यंदिनं सवनं पशुमद्, यदङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत्, किंयुता तत्पशोश्चरन्ति यद्वपया चरन्ति, किंयुता तद्यत्पुरोडाशैः, किंयुता तद्यद्वदानै, रूपेण तत् पशोश्चरन्ति यद्वपया चरन्त्या,—त्मना तद्यत्पुरोडाशैः, शरीरेण तद्यदवदानैः, कस्मै पशुः प्रत्यङ् नियुज्यता, उदङ् प्रणीयते, दक्षिणत उपसाद्यते, प्राङ् हूयता, इति पृच्छेद्, यत् प्रत्यङ् नियुज्यत इमां तेन दिशमभिजयति, यद्दक्षिणत उपसाद्यत इमां तेन, यत्प्राङ् हूयत इमां तेन, यदुदङ् प्रणीयते मनुष्यलोकं तेनाभिजयति, यद्दक्षिणत उपसाद्यते पितृलोकं तेन, यत् प्राङ् हूयते देवलोकं तेन, यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन लोकं, यदिडोपहूतं प्रत्यङ् हरन्तीमं तेन लोकं, सर्वा वा इमा दिशः पशुना३ऽभिजयति सर्वांल्लोकान्त्सर्वा एवास्येमा दिशोऽभिजिता भवन्ति सर्वे लोकाः ॥ ५ ॥

अथैता आप्रियः, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एता आप्रीरपश्यत्, ताभिरात्मानमाप्रीणीत, यज्ञो वै प्रजापति,—र्यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमाना आप्रीणीते, वपया वै पशोर्देवाः प्रातःसवने स्वर्गं लोकमायन्, यद्वपया प्रातःसवने चरन्ति वपया वा एतत् पशोर्यजमानः प्रातःसवने स्वर्गं लोकमेति, ते वै स्वर्यन्तोऽस्थानि शरीराण्यधून्वत, यदङ्गैस्तृतीयसवने चरन्त्य,—स्थ्नां शरीराणां निष्क्रीत्यै, पशुं स्नपयन्ति, यदेवास्याभिनिपन्नं शमलममेध्यं तच् छुन्धन्ति, पशुमुपाकृत्याग्निं मन्थन्ति पशूनामवरुद्ध्यै, द्वौ वै वज्रो, घोर३रोऽन्यः, शिव३वोऽन्यो, यः शुष्कः स घोरो, य आर्द्रः स शिवो, वज्रेण खलु वै वीर्यं क्रियते, वज्रं वा एतदादत्ते वीर्याये,—प त्वैतो,—प एवेन,—मुपावीरसीत्यु,—प रक्षोऽवत्यु,—पो देवान्दैवीर्विशः प्रागुरित्ये,—ता वै दैवीर्विशो यत् पशवो, वह्नय उशिजा इत्ये,—ते वै वह्नय उशिजो यदृत्विजश्च धिष्ण्याश्च, बृहस्पते धारया वसूनीति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैनान् यच्छति, हव्या ते स्वदन्तामिति, स्वदितमेवैनमालभते, देवत्वष्टर्वसु रण्व इति, त्वष्टा हि रूपाणि विकरोति, रेवतीरमेध्यमिति, पशवो वै रेवती,—र्यदुत्ये-

[ ६ ] मै. १,२,१५। तै ६,३,६,७,२—४। क.ठ. २६,३। कपि ४१,६-७। श ३,७-१०,४,२०] क.श्र ६, ८-१२,४,३६।

यैनां, देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्या,—मिति देवताभिरेव, द्वौ वै पाशौ, घोरोऽन्यः, शिवोऽन्यो, यो यज्ञियः स घोरो, योऽयज्ञियः स शिव, ऋतस्य त्वा देवहविः पाशेनेति, य एव यज्ञियः पाशस्तेनैनमालभते, प्रतिमुञ्चामीत्य,—भि हि मनुष्या दधत्य,—स्मै त्वा जुष्टमिति, यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—र्धर्षा मानुषा इति, मनुष्या हि धारयन्ति, शुष्को वा एषोऽमेध्यो, यत्पशुं नियुनक्त्युमा एवैनौ मेध्यौ करोति, प्रत्यञ्चं नियुनक्ति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते, प्राणेषु वा एतस्य देवता उपस्थिता यत्पशुं नियुनक्ति, प्रतीचीरिवास्मै देवता नियुनक्त्य,—द्भ्यस्त्वौषधीभ्या इत्य,—द्भ्यो ह्येष ओषधीभ्यो जुष्टं प्रोक्षामीति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—रनु त्वा माता मन्यतामनु पितेत्य,—नुमत एवैनं मात्रा पित्रा भ्रात्रा सख्यालभते, ऽनुमानाविह देवान् देवायते यजमानायेति, देवताभ्य एवैनं निदिशत्य,—पां पेरुरसीत्य,—पां ह्येष पेरुः, स्वात्तं सद्धविरापो देवीः स्वदन्त्विति, स्वदितमेवैनमालभते, ऽथ यदुप गृह्णात्युप च सिञ्चति सर्वत एवैनं मेधेन समर्धयति, सं ते वायुर्वातेन गच्छतामिति, वातमेवास्य प्राणमन्ववार्छति, सं यजत्रैरङ्गानीति, यज्ञियमेवैनमकः, सं यज्ञपतिराशिषेति, यजमानमेव यज्ञस्याशिषा समर्धयति, शिरो वा आघार, आत्मा हवि,—र्यदाघारमाघार्य पशुना समनक्त्यात्मन्वा एतच्छिरो यज्ञस्य प्रतिदधाति, वज्रो वै स्वरु,—र्वज्रः स्वधिति,—र्यत्स्वधितिनानक्ति वज्रेणैवैनं स्तृणुते, यास्ता तया मृतस्यावद्यति, हविर्भूता वा एषा, हविष्येव हविषो- ऽवद्यति ॥ ६ ॥ १६

अग्निना वै मुखेन देवा इमाँल्लोकानभ्यजयन्, यत्पर्यग्निं करोत्यग्निना वा एतन्मुखेन यजमान इमाँल्लोकानभिजयति, रक्षांसि वा एवं जिघांसन्ति, यत्पर्यग्निं करोति रक्षसामपहत्यै, त्रिः पर्यग्निं करोति, त्रयो वा इमे लोका, एभ्यो वा एतल्लोकेभ्यो यज्ञाद्रक्षांस्यपहन्ति, चात्वालमपि पर्येत्य,—पां वा अग्रानां योनिः, स्कन्दति वा एतद्धविर्यद्विश्रोतति यद्विलिप्यते, ऽग्निर्वै सर्वा देवता, अत्र वै सापि देवता यस्या आलभ्यते, यत्पर्यग्निं करोति तामेवैनद्गमयति, किंयद्वाहैतत्पशोः, किंपद्वा यत्प्रयाजा, एतर्हि खलु वै सर्वो यद्यापित,—स्तस्मादा-

---

[ देवस्य त्वा सवितु० । अथर्व १९,५१,२ ]
[ ७ ] मै. १,२,१५ । तै ६,३,८ । श ३,११ । काण्व ३,१३-१५ ।

श्राव्योऽपर्प्रेष्यति, देवताभ्यो वै पूर्वमाश्रुत्य,—दथ वा अत्र पशोराश्रावयति, तस्मादाश्राव्योऽपर्प्रेष्यत्यु,—मंये वा एतं वध्यमानमनुवध्यन्ते ये ग्राम्याः पशवो ये चारण्या, ये वध्यमानमनु वध्यमाना अन्वैक्षन्त मनसे,—ति यज्जुहोति तेषाᳫं वा एषोन्मोक्षा; यन्न जुहुयादनुन्मुक्ताः स्युरुरर्वन्तरिक्षᳫं इवीहीत्यं,—न्तरिक्षदेवत्यो वा एष एतर्हि, रक्षाᳫंसि वा एतं जिघाᳫंसन्ति, प्रच्युतमितोऽप्राप्तममुत्रा,—ऽग्निं पुरस्ताद्धरन्ति रक्षसां पराणुत्त्यै रक्षसामपहत्या, अथो हव्याय वा एतत् प्रणीयमानाय देवताः पुरस्ताद्धरन्त्य,—ग्निं पुरस्ताश्निदधात्यस्कन्नत्वाय, पशोर्वै माप्राणायानीयमानस्याहवनीयं मध्योऽभ्युपक्रामति, यो वै तर्हि पशुमन्वारभते तᳫं यज्ञस्याशीर्गच्छति, यदाह, रेवति प्रेधा यज्ञपतिमाविशेति, यत्र वा एतत् क्वच यजमानᳫं सन्तᳫं यज्ञस्याशीर्गच्छति, वपाश्रपणीभ्यामन्वारभते, तत्स्विदुभयमक,—रुरो अन्तरिक्ष सजूर्देवेन वातेनेत्य,—न्तरिक्षᳫं वै पशवो, वातः प्राणः, प्राणानस्मिन् दधाति, स्मनास्य हविषो यजेति, देवता एव प्रीणाति, समस्य तन्वा भवेति, पुनरेवैनᳫं संभावयति, वर्षीयो वर्षीयसा इति, तेन यजमानो वसीयान् भवति, यद्यज्ञं पशुमाहुर्यत्तमभिमन्यन्ते रक्त तर्हि यज्ञो भवतीति, यदाह, यज्ञᳫं यज्ञपतौधा इति, यज्ञपतौ वा एतद्यज्ञं प्रतिष्ठाप्याथ पशुमालभन्ते, स्कन्दति वा एतद्धविर्यद्विश्वोतति यद्विलिप्यते यत्तृणमुपास्यत्यस्कन्नत्वाय, प्रत्यञ्चᳫं संज्ञपयन्ति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्त उदीचीनपाद ᳫंन्यावृत्त्यै ॥ ७ ॥ १७

ऋत्विजो वृणीते, छन्दाᳫंसि वा ऋत्विज,—श्छन्दाᳫंसि वा एतद्वृणीते, यद्धोतारᳫं वृणीते जगतीं तद्वृणीते, यदध्वर्युं पङ्क्तिं तद्, यदग्नीधमतिछन्दसं तद्, यन्मैत्रावरुणं गायत्रीं तद्, यद् ब्राह्मणाच्छंᳫंसिनं त्रिष्टुभं तद्, यत्पोतारमुष्णिहं तद्, यन्नेष्टारं ककुभं तद्, यदाह ॥ अग्निर्देवानाᳫं विशो पुरएता ॥ इति, यजमानᳫं वा एतद्वृणीते, स घृती वषट्करोति, नाछावाकᳫं वृणीते, पश्चाज्जेत्र वा एषा, होत्राः स्तुरर्ग्या, यदछावाकया द्विदेवत्याः शᳫंसति, द्विपोयजमानः प्रतिष्ठित्या, अथ यदग्नीधं मध्यतो वृणीते तस्मादयमग्निर्मध्यत ओषधीनाᳫं, यदुत्तमः मᳫंयजताᳫं सᳫंयजति तस्मादुपरिष्टान्मथ्यमानः प्रजायत, एतद्वा अस्य छन्दाᳫंसि व्रतानि युक्तान्यभूवन्, यदवृता वषट्कुर्युरार्त्यᳫं यज्ञस्याशीर्गच्छे,—दथ यद्वृता वषट्कुर्वन्त्येकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठति, तस्मादेकः पशोर्वषट्करोत्ये,—कᳫं हि वृणुते,

[ ८ ] तै. ६,३,७,५ । काठ. २६,९ । कपि ४१,७ ।

दश वै पशोर्देवता, दशास्मिन् प्राणा, यद्दश प्रयाजा, या एवास्मिन् देवतास्ता एतद्युजत्य,—
थ य एष एकादशो, यस्या एव देवतायै पशुरालभ्यते तामेवैतद्युजत्य,—थ यदेकादशानुयाजा,
या एवैतद्देवता अयाक्षीत् ता एतैरनुप्रीणाति, हवो वा एष मुरतोऽमुत्र भूतो, दश वै पशो-
र्देवता, दशास्मिन् प्राणाः, प्राणाः खलु वै पशोर्देवता, यद्दश प्रयाजाः प्राणानेवास्य प्रयज-
त्या,—त्मा वै प्राणानामेकादश, आत्मा वपा पशो,—यदेष एकादशः परिशय आत्मा वा एत-
दात्मानं परिशये, ऽथ यदेकादशानुयाजाः प्राणानस्मिन् दधाति ॥ ८ ॥ १८ – २०
[ १६७७ ]

॥ इत्युपरिकाण्डे संक्रान्ता नाम नवमः प्रपाठकः ॥ ९ ॥

---

अथ दशम प्रपाठकः ।

पत्नी वै प्रच्यवमानामुष्यादित्यस्य लोकमभिप्रच्यवेत, हिनस्ति खलु वा एष तं यो ऽस्य
लोकमभिप्रच्यवते, यदाह, नमस्त आतानेत्य,—मुष्मा एव नमोऽक,—रनर्वा प्रेहीत्यनेनाः
प्रेही,—ति वा एतदाह यजमानाय, घृतस्य कुल्यामनु सह रायस्पोषेणेत्या,—शिषमेवाशास्त,
देवीरापः शुद्धा यूयं देवान् युयुध्वमित्य,—पो वा एतद्रूपन्ति, पूताभिराभिः पूतांश्चरन्ति,
तस्माद्वा एता बहु रिप्रममेध्यं चरन्तीमापो न हिंसन्ति, हवो वा एष मुरतोऽमुत्र भूरतो,-
ऽद्भ्यो वै प्रजाः प्रजायन्ते, पत्नी प्रजनयति, यदद्भिरभिषिञ्चति पुनरेवैनं प्रजनयति,
संत्रीन् प्राणान्त्संमृशति सर्वाण्यङ्गान्ये,—तानान् हि पशुः, पशोर्वै मार्यमाणस्य प्राणाञ्छुगृ-
छति, यदाह, वाचमस्य मा हिंसीः, प्राणमस्य मा हिंसीरित्य,—द्भिर्नानास्य्वेत्
प्राणाञ्छुचो मुञ्चति, यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व, देवेभ्यः शुम्भस्वेति, यदेनास्य
शमयन्तः क्रूरमक्रंस्तदक्रूरमक,—स्तच् शमयति, यं वा एतं स्तोका अनुपद्यन्ते वं इमाम-
शान्ता ऋच्छन्ति, तत इमाञ्छुगृच्छति, यदाह, शमद्भ्य इति, शमयत्येवं, शान्ता एन-
मामृच्छन्त्यहिंसाया, ओषधे त्रायस्वैनमित्या,—ह त्रात्या एवं, स्वधिते मैनं हिंसीरिति,

[ १ ] मै १,२,१६ । तै ६,३,८—९ । वा ६,१०-१३,१५-१६,५,१०,१,१,२०,७,३०,१४,२२,२,७,२९,३,११; २२,२८,३९,१३। कण्व ६,१४—१५,१९—२२,४,१४,१,१,३७,७,३०,१५,२८,१,१०,४६,२८,३१,३९,१०।

वज्रो वै स्वधिति,—र्वज्रादेवास्मा एतदन्तर्दधात्यहिंसायै, सर्वाभ्यो वै देवताभ्यः पशुराल-
भ्यते, यदाह, रक्षसां भागोऽसीत्ये,—तेन वा एतद्भागधेयेन रक्षांसि पशोर्निर्भजती,—द-
महं रक्षोऽवबाध, इदमहं रक्षोऽधमं तमो नयामीत्या,—ह रक्षसां धृत्यै रक्षसाम-
न्तरित्यै, पशवो वै वपा, यदुपतृन्द्यात् पशून् हिंस्याद्, यन्नोपतृन्द्यादयताः स्यु,—र्यत्र
वनिष्ठं तदुपतृन्द्यात् पशूनां यत्या, इषे त्वोर्जे त्वेती,—षे ह्येषोर्जे ह्येषा, देवेभ्यः शुन्धस्व,
देवेभ्यः शुम्भस्वेति, देवेभ्य एवैनां शुन्धति, देवेभ्यः शुम्भति, घृतेन द्यावापृथिवी
प्रोर्णुवाथामिति, घृतेनैव द्यावापृथिवी प्रोर्णोत्य,—मुष्मै त्वा जुष्टमिति, यस्या एनं देवतायै
पशुरालभ्यते तस्या एनं जुष्टमक,—र्नमः सूर्यस्य संदृश इत्य,—मुष्मा एवं नमोऽक,—रित्थं
पर्यावर्तत, एवं हि यज्ञः पर्यावर्तते, ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तत,
उर्वन्तरिक्षं वीहीत्य,—न्तरिक्षदेवत्यो वा एष एतर्हि, रक्षांसि वा एतं जिघांसन्ति,
गच्युतमिवोऽश्रामुमनु, कार्ष्मर्यमयी वपाश्रपणी भवतो रक्षसामपहत्यै, यस्मा एवामुतोऽग्नि
पुरस्ताद्धरन्ति तस्मा इतो देवता वा एतद्रूपमनुपर्यावर्तमानमेति, चरमत उपप्रतिगृह्णात्यच्छम्ब-
ट्काराय, यद्वतिहरेद्देवमेवातिहरेद्, विश्वतोमुखो ह्यग्निः, प्रत्युष्टं रक्षः, प्रत्युष्टा अराति,-
—रित्याह रक्षसां धृत्यै रक्षसामन्तरित्यै, वायोः स्तोकाना,—मिति तृणमुपास्यति
स्तोकानां विधृत्यै, वायुर्ह्येतानमुतो विसृजति प्रजानां क्लृप्त्या, अग्रं वा एतद्रू-
पंस्या,—ऽग्रमोषधीना,—मग्रेणाग्रं समर्धयत्य,—थो अग्राय वा एतद्रूपस्याग्रमोषधीनामिध्मं
ग्निनोति, हविषो वा एते स्तोकाः, स्कन्दति वा एतद्धविर्यद्विश्रोतति यद्विलिप्यते,
यदाह ॥

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥

इति वेनेनाप्य ते हुता संस्कृता वषट्कृता भवन्ति, नानादेवत्या वा एकाद-
शिन्या पशव आलभ्यन्ते, ऽथाग्नेयी प्रथमानूच्यते, ऽग्निर्वै सर्वा देवता, अत्र वै सापि
देवता यस्या आलभ्यते तामेवैनद्गमयति, यर्हि लोहितेव शृता तर्हि रौद्री, यत्तर्हि जुहुया-
द्रुद्रायास्य पशूनपिदध्याद्, यर्हि श्येनीव शृता तर्ह्याग्नेयी, तर्हि होतव्या, तथास्य
रुद्रः पशूननभिमानुको भवति, कृष्णं वा एतर्हि पशुर्यशोऽनृतो, यद्रूपामभिघार्य

[ जुषस्व सप्रथस्तमं० आसनि । ऋ. १,७५,१, तै. ब्रा ३,६,७,१ ]

पृषदाज्यमभिघारयेद्रुद्रायास्य पशूनपिदध्या,—दथ यत् पृषदाज्यमभिघार्य वपामभिघारयति यथा-
पूर्वं वा एतत् पशुमुपैत्य,—थो एवमस्य रुद्रः पशूननभिमानुको भवति, पुरस्तात्
स्वाहाकारा वा अन्ये देवा, उपरिष्टात् स्वाहाकारा अन्ये, त उभयेऽस्य मेध्येऽवरुध्यन्ते ॥
स्वाहा देवेभ्यः ॥ इति पुरस्ताद्वपाया जुहुयात् ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ इत्युपरिष्टात्,
तथास्य त उभयेऽवरुद्धा भवन्ति, पशोर्वै मार्यमाणस्य प्राणाञ्शुगृच्छति, प्राणान्त्संगृह्य वपा-
मुपविसृजे,—दात्मा वपा पशो,—रात्मन्नेवास्य प्राणान् दधाति, दक्षिणस्य पूर्वपदस्यावदेय,-
—मिति ह स्माहुर्दाक्षायणा,—स्तथास्य सर्वस्य पशोरवत्तं भवतीति, स्वाहोर्ध्वनभसं मारुतं देवं
गच्छत,—मिति वपाश्रपणी अनुप्रास्यत्यू,—र्ध्वनभसो वा एते मारुतस्य भागधेयं, तमेवैतेन ३-७
गमयती,—मे वा एते विषूची अनुप्रास्यत्य,—नयोर्विधृत्यै ॥ १ ॥

पुरुषं वै देवा मेधायालभन्त, तस्य मेधोऽपाक्रामत्, सोऽश्वं प्राविशत् तेऽश्वमालभन्त,
तस्य मेधोऽपाक्रामत्, स गां प्राविशत्, ते गामालभन्त, तस्य मेधोऽपाक्रामत्,
सोऽविं प्राविशत्, तेऽविमालभन्त, तस्य मेधोऽपाक्राम३त, सोऽजं प्राविश३त्, तेऽ-
जमालभन्त, तस्य मेधोऽपाक्रामत्, स यवं प्राविशत्, ते यवमालभन्त, तस्य मेधो-
ऽपाक्रामत्, स व्रीहिं प्राविशत्, ते व्रीहिमालभन्त, तं व्रीहा आनुवन्,
यद्व्रीहिमयः पुरोडाशो भवति मध्यतो वा एतत् पशोर्मेधो धीयते, सुषिरो वै तर्हि पशुर्यर्हि
वपामुत्खिदन्ति, यद्व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय, द्वादशकपालो भवति,
द्वादश मासाः संवत्सरः, संवत्सरमनु पशवः प्रजायन्ते, प्रजननायैकादशकपालः कार्या,
एकादशाक्षरा त्रिष्टु,—बैन्द्रमेतच्छन्दो यत्त्रिष्टु,—बैन्द्राः पशवः, पशुष्वेवास्मै पशून् दधाति,
देवा अन्योऽन्यस्मै पशुमालभ्य स्वर्गं लोकमायं,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वा-
रोक्ष्यन्तीति, तस्य मेधं प्राक्षारय,—न्त्स प्लक्षोऽभवत्, तत् प्लक्षस्य प्लक्षत्वं, क्रोशा वै तं
हृदयात् प्राक्षारयं,—स्तस्मादेतत् सुषिरं यत् प्लक्षशाखाया अवद्यति, मेधादेवाध्यवद्यति,
*पृषदाज्यस्योपहत्य यजेति ॥ शृतं हविः शमितः ॥ इति भूतत्वाय, विराड् विपस्या हि देवा,
जघ्नो यथेदं ब्राह्मणेभ्य ओदनं पक्वं प्राहैवं वा एतद्देवेभ्यो हविः शृतं प्राह,—त्वतः परीत्याभि-
घारयति पशूनामवरुद्ध्यै, प्राणापानौ वै पृषदाज्यं,—मात्मा हृदयं, यत्पृषदाज्येन हृदयमभि-
मध्यतो वा एतत् पशोः प्राणापानौ दधाति, सोमस्य वा एतद्धृदयं यद्धृदयं,—वै वा एतद्

[ २ ] तै ६.३.९—१०।

*

पशोर्यदुत्तरथाहिर्बर्हिः, श्रद्धा एतद्धव्यमुक्,—रस्कन्नमविक्षुब्धं मे हव्यं देवता गछादिति, देवाना४ वे सर्वेषां मना४सि गछन्ति पशा आलभ्यमाने, मनो वै मनोता, यन्मनोतायान्वाह मना४स्येनेषा४ संभावयति, हतो वा एष मृत्वोऽमुत्र भूतो, मनो वै मनोता, यन्मनोताया अन्वाह पुनरेवैन४ संभावयति ॥ २ ॥ ८-१०

हृदयस्यावद्यति, मनस एवं तेनावद्यत्य,—थो यावानेव पशुस्तस्यावत्तं भवति, जिह्वाया अनुद्यति, वाचं एव तेनावद्यत्य,—थो एतया ह्यग्रा ओषधीना४ रसं प्राश्नाति, श्येनस्यावद्यति, वक्षस एव तेनावद्यत्य,—थो अत्र हि स रसः प्रतितिष्ठति दोष्णोऽनुदाय पार्श्वयोरवद्यति यज्ञस्य परिगृहीत्यै, यक्नोऽनुद्यति, मध्यस्यैव तेनावद्यति, मतस्नयोरवद्यति, रूपस्यैव तेनावद्यति, श्रोण्या अपदाय गुदस्यानुद्यति, तदुत्तमस्यावद्यत्यु,—त्तम४ ह्यायु,—र्यदुन्यस्योत्तरस्यानुद्येत प्राणमस्यापिदध्यात्, प्रमायुकः स्यात्, तस्मात्तस्योत्तमस्यावद्यत्यु,—त्तम४ ह्यायु,—हृदयस्यानुदाय जिह्वाया अनुद्यति, यथापूर्व४ वा एतत् पशुमुपैत्य,—थो एवमस्य सर्वस्य पशोरवत्तं भवत्ये,—कादश कृत्वोऽनुद्यति, दश वै पशोः प्राणा, आत्मैकादश,—स्तथास्य सर्वस्य पशोरवत्तं भवत्ये,—कादश वा एतान्यवदानानि, तानि द्विर्द्विरवद्यति, तद् द्वावि४शति,—स्त्रीणि त्र्यङ्गाणि, तत् पञ्चवि४शतिः, पञ्चवि४शेन वै स्तोमेन मनुः प्रजा असृजत, तन्मनुस्तोमो वा एष प्रजननाय,—तद्वै सर्वस्य पशोरवत्त,—मथ वै प्राणस्यापानस्य व्यानस्य तेषामनवत्त४, यत् त्र्यङ्गाणामवद्यति तेनैव प्राणस्यापानस्य व्यानस्य तेषामवत्तं भवति, विश्वरूपो वे त्वाष्ट्रः पशूनभ्यवमत्, तस्मात् पशवो विश्वरूपा, अभिवान्तो वै पशुः पृषित,—स्तस्मात् पृष्टीनां मज्जा नाथः, स वा अधस्तान्न प्राप्नो,—दुतद्ध जीवं, तस्माद्दतोऽनुद्यत्य,—क्ष्णयाङ्गानामवद्यति, पशु४ वा एतदाश्रमयति, तस्मात् पशवोऽक्ष्णयाङ्गानि प्रहरन्तो यन्त्या,—ग्नेयो वै सर्वः पशु,—रथ वा उतान्यस्यै देवताया आलभ्यते, यद्दोष्णः पूर्वार्धादग्नयेऽवद्यति गुदस्य मध्यतः श्रोण्या जघनतस्तथास्य सर्वस्य पशोरग्नयेऽवत्तं भवति, त्रेधा गुदं करोति, त्रेधा ह्येतर्हि पशु,—रन्त्यङ्गानि समवत्तमवदानानि, यावानेव पशुस्तस्मिन्नायुर्दधाति, त्रेधा मेदः करोति, मेदोरूपा हि पशवः, सर्वाणि वै पशोर्मेद्यतोऽङ्गानि मेद्यन्ति, यावानेव पशुस्तस्मिन् मेदो रूपं दधाति, यदुर्मिर्पा यवन्तगर्पा,—ति ह स्माह पञ्जवुचा राजस्तम्बायनः प्र वा इतो मनुष्याः पशु च्यावयन्ति,

[ ३ ] तै ३,३,१० ।

नामुत्र गच्छन्तीति, यद्धिरण्यमवधाय जुहोति हिरण्यज्योतिषमेवैन२ स्वर्गं लोकं गमयति ॥ ३ ॥
११

वसाहोमं प्रयौति, रस२ वा एतत् प्रयौति, स्वधितिना प्रयौत्ये,—तेन हीतेरपामङ्गानामवद्यति,
तत्स्विदवदानमकु,—रथो वज्रेणैवाहुतिमवरुन्द्धे, यूप एतयान्वित२ शमयत्यू,—र्ये रसो यूरू,—
र्जी वा एतद्रसेन पशु२ समर्धयत्य,—थो यावानेव पशुस्तस्मिन्त्सदधाति, पार्श्वेनापिदधात्यूर्जः
परिगृहीत्यै, हतो वा एष मृ३तोऽमुत्र भूतो, यत्पशु२ संमृशति पुनरेवैन२ संभावयति,
हव्यं पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयित३व्य,—मित्याहुर्यदाहुतीर्हुत्वा पशु२ संमृशति
हव्य२ वा एतत् पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयत्य,—र्धस्रुचे जुहोती,—य२ वा अर्ध-
स्रु३चो, ऽसा अर्धस्रुचो, ऽन्तरेमे अन्तरिक्ष,—मन्तरिक्षमिमाः प्रजाः, प्रजास्वेव रसं दधाति,
वनस्पति२ यजति, सौमो वै वनस्पतिः, सौमीरिमाः प्रजाः, प्रजास्वेव रसं दधाति, प्राणा-
पानौ वै पृषदाज्यं,—मात्मा हवि,—र्यत्पृषदाज्यं जुहोत्यात्मन्वा एतत् पशोः प्राणापानौ दधाति,
दिग्भ्यो जुहोती,—मा एव दिशो रसेन व्युनक्ति, प्राचीमुत्तमां जुहोति, प्राचीमेव दिशं पुनरुपा-
वर्तन्ते, ऽध्यूध्नी२ होत्रे हरन्ति, वैश्वदेवो वै होता, वैश्वदेवीरिमाः प्रजा, ऊधः खलु वै
प्रजा अनूपजीवन्ति, सर्त्रा एवैनाः पयस्विनीः करोति, गुदेनोपयजति, प्राणो वै गुदः,
प्राणादधि प्रजाः प्रजायन्ते प्रजननाय, स्थविमत उपयजति, स्थविमतो हि प्रजाः प्रजायन्ते,
यदणिमत उपयजेत् प्रजननमपिहन्यात्, तस्मात् स्थविमत उपयजत्य,—संभिन्दन्नुपयजति प्राणा-
नामसंभेदाय, यत्संभिन्द्यात् प्राणान्त्संभिन्द्याद्, यं द्विष्यात्तस्य संभिन्द्यात्, प्राणानस्य
संभिनत्ति, नोपयज्य२, यदुपयजेत् प्राणानुपयजेत्, प्रमायुकः स्यात्, तदाहु,—रुपयज्यु-
मेवे, प्रजनन२ वा उपयजो, ऽपि ह स प्रजायते य उपयजतीत्याभारद्वाजे,—ति ह स्माह
शुचिवृक्षो गौपालायनः, किं तर्हि प्रजा आसन्यर्हि यज्ञो नानोपयद्भिरासी,—न्न प्रजाः प्राजा-
यन्त, नौषधयः फलमगृह्णन्, यदा वाव यज्ञ उपयद्भिः समभवदथ प्रजाः प्राजायन्ता,—ऽथौ-
षधयः फलमगृह्ण,—न्नेकादश प्रयाजा, एकादशानुयाजा, एकादशोपयज,—स्तत्त्रयस्त्रि२शत्,
त्रयस्त्रि२शद्देवता,—स्ता एवास्यैताभिरभीष्टाः प्रीता भवन्त्ये,—तद्वा अस्य पशोरनवाप्तिष्टोऽन-
भीष्टोऽभूद्, यास्य मात्रा तामेनं गमयति, स्व३र्ग्यो वै सर्वः पशु,—र्यदन्यत्राहवनीयाज्जुहु-

[४] मै. १,२,१७। तै ६,३,११।

यदस्वर्ग्यः स्यात्, पशुश्रपणादग्निमाहरन्ति तेन स्व३र्ग्यः सर्वः पशु,—र्यत् एवं पूर्वमवादात्तंवोऽ-
पूरमंवद्यति, तस्मात् समानाद्योनेर्नानारूपाः पशवः प्रजायन्ते, यज्ञो वै देवानामत्यने,—दत्त्वै
देवा उपयद्भिरप्यवपन्ननतिनेदाय, यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिवपन्त्यनातिनेदाय,
यदाथा वै पुरुषः प्रत्यङ् छिद्रं एवं॰ यज्ञः प्रत्यङ् छिद्रं,—स्तं देवा उपयाद्भिरप्यदधुरछिद्रत्वाय,
यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिदधात्यछिद्रत्वाय ॥ ४ ॥ १२

ये केचार्वाचीनमेकादशिन्याः पशवस्तानुत्तरमर्धं॰ यूपस्य नियुञ्ज्याद्, रौद्रा वै पशवो,
ऽग्नींधृति,—दक्षिणे हविर्धाने सोममासादयन्ति, तथास्य रुद्रः पशूननभिमानुको भवति,
पात्रेषु वा अहमध्वर्युं चानध्वर्युं च विजानामी,—ति ह स्माहारुण औपवेशिः, कति पात्राणी,-
—ति पृच्छेद्, द्वादश पात्राण्यु,—पाꣳशुसवनस्त्रयोदशं॰, यत्तन्मीमाꣳसन्ते, पात्रा३म्-
पात्रा३मिति, मीमाꣳसन्ते हि त्रयोदशं मासं, मासा३न्न मासा इति, पञ्च प्रातःसवने
पुरोडाशा,—श्चत्वारो माध्यंदिने सवने, चत्वारस्तृतीयसवने, इतो वा एता निरमिमीत
प्रजापति,—रात्मन एवं, यत् एवैता निरमिमीत तदेनैरपिधीयते, देवाश्च वा असुराश्चास्पर्ध-
न्ता,—ऽऽयतनवन्तोऽसुरा आस,—न्ननायतना देवा, इमे लोका असुराणामायतनमास॰,—स्ते
देवाः सꣳस्तम्भं॰ सꣳस्तम्भं पराजयन्ता,—ऽनायतना ह्यास॰,—स्ते वै सवनान्येवायतनमचाय॰,-
—स्तानि प्राविश॰,—स्तानि नाभ्रियन्त, ते वै पुरोडाशानेव सवनानामायतनमचाय॰,—स्ता-
न्निरवप॰,—स्तान्यभ्रियन्त, ततो देवा अभवन्, परासुरास्त,—य एवं॰ वेदायतनवान्
भवति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, तस्मादनुसवनं पुरोडाशा
निरूप्याः सवनानां धृत्यै, तस्मादनुसवनं पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, घृतं॰ वै
देवा वज्रं कृत्वा सोममघ्न,—न्नभि खलु वा एतं घ्नन्ति, यत् प्राश्नीयात् सोमपीथं॰ हन्याद्,
यन्न प्राश्नीयात् सोमपीथेन व्यृध्येत, यत्रानभिघृतं तत् प्राश्यः सोमपीथस्य धृत्यै, तदु
धृत्यै, प्राश्य एवे,—न्द्रो वै वृत्रमहं॰,—स्तेन्नं किं चनाधिनोत्, तं पुरोडाश एवाधिनोत्,
तस्मात् पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, पञ्च प्रातःसवने पुरोडाशाः, पुरोडाशः
परिवापो धानाः करम्भः पयस्या, सा पुरोडाशपङ्क्ति,—र्द्विनाराशꣳसाः प्रातःसवने,

[५] कठ २९,१। वा १९,२१। कप २१,२१।

द्विनाराशꣳसा माध्यंदिने सवना, एकनाराशꣳसास्तृतीयसवने, सा नराशꣳसपङ्क्ति,—स्त्रीणि सवनान्यवभृथो, ऽनुबन्ध्या सवनाना पञ्चमी, सा सवनपङ्क्ति,—रेषा वै सा पङ्क्तिर्यामा- हुर्ब्रह्मवादिनो, वेत्थ ता पङ्क्तिꣳ यया न स्तुवते न शꣳसन्त्य,—थ यज्ञꣳ वहन्त्य,—थ यज्ञꣳ १३
सꣳस्थापयन्ता इति ॥ ५ ॥

देवाश्च वा असुराश्चास्पर्धन्त, तेषाꣳ वा इन्द्रियाणि वीर्याण्यपाक्राम,—न्नृक्सामे वा एभ्य- स्तदपाक्रामतां, पशवो वागिन्द्रियं प्राणापानौ, तेषी इन्द्रोऽकामयत, सायुज्य गछेयामिति॥ हरिवꣳ इन्द्रो धाना अत्तु ॥ इत्यृक्सामे वा इन्द्रस्य हरी, ऋक्सामाभ्यामेवं सायुज्यमगछत् ॥ पूषण्वान्करम्भः ॥ इति, पशवो वै पूषा, पशुभिरेव सायुज्यगछत् ॥ सरस्वतीवान् भारती- वान् परिवापः॥ इति, वागेव सरस्वती, वाचैव सायुज्यमगछत्॥ इन्द्रस्यापूपः॥ इतीन्द्रियꣳ वा इन्द्र, इन्द्रियेणैवं सायुज्यमगछत् ॥ मित्रावरुणयोः पयस्या ॥ इति प्राणापानौ वै मित्रावरुणौ, प्राणापानाभ्यामेव सायुज्यमगछन्, ततो देवा अभवन्, परासुरा,—स्तद्य एवꣳ वेदैतैरेवेन्द्रि- येर्वीर्यरेतैर्महिमभिः सायुज्यं गछति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, दीर्घजिह्वी वै देवानां प्रातःसवनमवालेद्, तद्व्यमाद्यत्, सा पयस्याभवत्, तस्मात् पयस्या विमदित- रूपेव मैत्रावरुणी प्रातःसवने स्यात्, प्राणापानौ वै मित्रावरुणौ, प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते, न गुदः पर्याकर्तवै, यद्गुदं पर्याकुर्यादुदावर्तः प्रजा हन्याद्रक्षसामनन्ववजयाय, यूपः पुरस्तान्मीयते, यदग्रेण यूपं पशुꣳ हरेयुस्तदनु रक्षाꣳसि यज्ञमनुजयेयु,—रन्तराग्नि च यूपं १४-२४
च हत्यो रक्षसामनन्ववजयाय ॥ ६ ॥

समुद्रं गछ स्वाहेत्य,—पस्थꣳ वा एतद्यजत्य,—न्तरिक्ष गछ स्वाहेति, रेत एवैतद्दधाति, देवꣳ सवितारं गछ स्वाहेत्या,—ह प्रसूत्या एवा,—ऽहोरात्रे गछ स्वाहेत्य,—होरात्रे ह्यनु प्रजाः प्रजायन्ते, मित्रावरुणौ गछ स्वाहेति, प्राणापानौ वै मित्रावरुणौ, प्राणापाना एवासु दधाति, द्यावापृथिवी गछ स्वाहेत्याभ्यामेवैनाः सृष्टाः परिगृह्णाति, छन्दाꣳसि गछ स्वाहेति, वागेव छन्दाꣳसि, वाचमेवासु दधाति, सोमं गछ स्वाहेत्य,—न्नꣳ वै सोमो, ऽन्नमेवासु दधाति, यज्ञं गछ स्वाहेति, यज्ञिया एवैना अक,—दिव्यं नभो गछ स्वाहेति,

[ ६ ] काठ २९ १—२ ।
[ ७ ] मै १२,१८ । तै ६,४ १ । वा ३ २१ । कण्व ६,२८—२९ ।

वृष्टिमेवाभ्यो निनयन्त्य,—ग्निꣳ वैश्वानरं गच्छ स्वाहेति, संवत्सरो वा अग्निर्वैश्वानरः,
संवत्सर एवैनाः प्रतिष्ठापयति, संवत्सरायुपमेनाः करोति, मनो हार्दिꣳ यच्छे,—त्याह
प्राणानां गोपीथायौ,—षधीभ्यस्त्वेत्यो,—षधीष्वेव रसं दधाति, यो वै विद्वान् वाविद्वान् वोप-
यज्ञो मिथुनयोप यजति प्राणान् वा एतन्मिथुनयाकुरुते, यदाह, मनो हार्दिꣳ यच्छेति,
प्राणान् वा एतदृतुशः कल्पयते, पशुर्वा आलब्धः शोचति, तस्य मध्यꣳ शुगभिसमेति,
सा हृदयेप्नागच्छति, यत् पुरुषमुपस्पृशेन्मनु३ष्याञ्शुगृच्छेद्, यद्गामुपस्पृशेत् पशूञ्शुगृच्छेद्,
यद्दारूपस्पृशेद्वनस्पतीꣳ शुगृच्छेद्, यत्तृणमुपस्पृशेदोषधीः शुगृच्छेद्, यदुदकमुपस्पृशेदपः शुगृच्छेद्,
यदार्द्रमनुदकं तच् शान्त्वं, तत्रोपोप्यं, तद्देवताꣳ शुचमवयजति ॥ ७ ॥ २५

[ १६५१]

॥ इत्युपरिकाण्डे पात्नीवन्ता नाम दशमः प्रपाठकः ॥ १० ॥

---

अथैकादशः प्रपाठकः ।

## सौत्रामणी ।

समिद्धो इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥ १
नराशꣳसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥ २
ईडितो देवैर्हरिवाꣳ अभिष्टिराजुह्वानो हविषा शर्धमानः ।
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥ ३
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदात् प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तꣳ वसुभिः सजोषाः ॥ ४
इन्द्रं दुरः कव३ष्यो धावमाना वृषाणꣳ यन्तु जनयः सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्ताꣳ सुवीरा वीरं प्रथमाना महोभिः ॥ ५

---

१ ] काठ. ३८,६ । तै. ब्रा. २,६,८ । वा. २०,३६—४६ । ऋग्. ११,११—३१ ।

[1]उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
पेशस्वती तन्तुना सꣳव्ययन्ती देवानां देवꣳ यजतः सुरुक्मे ॥ ६

दैव्या मिमाना मनसा पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥ ७

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अछिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥ ८

त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥ ९

वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदातु हव्यं मधुना घृतेन ॥ १०

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा हव्यमुन्दन्त्स्वाहाकृतं जुषताꣳ हव्यमिन्द्रः ॥ १ ॥ ११

[2]होता यक्षत्समिधाग्निमिडस्प३देऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं मधुशष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजं पथा मधुमदाभरन्नश्विनेन्द्राय वी३र्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षन्नराशꣳसं न नग्नहुं पतिꣳ सुराया भेषजं मेषः सरस्वती भिषग्रथो न च३न्द्र्यश्विनोर्वपा इन्द्रस्य वी३र्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजꣳ यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्दुरो दिशः कव३ष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वती शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना संजानाने सुपेशसा सम-

[ १ ] तै. ब्रा. २,६,११ । वा २१,२९—३९ । काण्व २३,३०—४० ।

